कम् । वाजपेयातिरात्राभ्यां हेमन्ते शिशिरे स्थितम् । अश्वमेधसमं प्राह वसन्तसमये स्थितम् । ग्रीष्मेऽपि तत् स्थितं तोयं राजसूयाद्विशिष्यते । एतान् महाराज ! विशेषधर्मान् करोति योऽप्यागमशुद्धबुद्धिः । स याति रुद्रालयमाशु पूतः कल्पाननेकान् दिवि मोदते च । अनेकलोकान् समहस्तपादीन् भुक्त्वा परार्द्धद्वयमङ्गनाभिः । सहैव विष्णोः परमम्पदं यत् प्राप्नोति तद्यागफलेन भूयः" ।

जलाशयखननारम्भनक्षत्रादि मु० चि० पी० उक्तं यथा "मित्रार्कध्रुववासवाम्बुपमघातोयान्त्यपुष्येन्दुभिः पापैर्हीनबलैस्तनौ सुरगुरौ ज्ञे वा भृगौ खे विधौ । आप्ये सर्वजलाशयस्य खननम्" मु० चि० ।

"मित्रोऽनुराधा अर्को हस्तः ध्रुवं रोहिण्युत्तरात्रयं वासवं धनिष्ठा अम्बुपः शततारका तोयं पूर्वाषाढ़ा अन्त्यं रेवती पुष्यः इन्दुर्मृगः एतैर्नक्षत्रैस्त्रयोदशभिः सर्वेषां जलाशयानां वापीकूपतड़ागनाम्नां तोयाधाराणां खननं शुभमुक्तम् उक्तञ्च व्यवहारतत्त्वे "आप्याम्बुपान्त्यपितृमित्रवसूत्तरार्कचान्द्रीज्यभेषु खननं सलिलाश्रयाणामिति" । कः ब्रह्मा तद्देवताकत्वेनाभेदात् रोहिणी । अथ जलाशयखनने लग्नविचारः पापैः पापखगैर्बलरहितैः सद्भिः, तनौ लग्ने सुरगुरौ वृहस्पतौ ज्ञे बुधे स्थिते सतीत्यर्थः लग्नात् खे दशमस्थाने भृगौ शुक्रे, आप्ये जलचरराशौ विधौ सति जलाशयखननं हितं उक्तञ्च रत्नमालायाम् "लग्ने जीवे ज्ञेऽथ वा दुर्बलैश्च क्रूरैः शुक्रे चापि मेषूरणस्थे । आप्ये चन्द्रे सर्वतोयाश्रयाणामारम्भाः स्युःसिद्धये निर्विकल्पम्" । कश्यपेनाप्युक्तम् "गुरौ ज्ञे वा लग्नगते शुक्रे कर्मगते, विधौ । आप्यभे जलकार्य्याणामारम्भः सिद्धिदः स्मृतः" इति । दीपिकायान्तु विशेषः "पुष्ये मित्रकरोत्तरश्रवरुणब्रह्माम्बुपित्र्येन्दुभिःशस्तोऽर्के शुभवारयोगतिथिषु क्रूरेष्ववीर्य्येषु च । पुष्टेन्दौ. जलराशिगे दशमगे शुक्रे शुभांशोदये प्रारम्भः सलिलाशयस्य शुभदो जीवेन्दुपुत्रोदये । खं धनिष्ठा । अन्ये तु वापीकूपतड़ागानामाकृतिभेदात्प्रत्येकं भिन्नानि नक्षत्राण्युक्तानि । तत्र वापीखननमाह रत्नोच्चयः "स्वात्यश्विपुष्यहस्तेषु सर्वदा च पुनर्वसौ । रेवत्यां वारुणे चैव वापीकर्म प्रशस्यते" । कूपारम्भमाह श्रीपतिः "हस्तः पुष्यो वासवं वारुणञ्च मैत्रं पित्र्यं त्रीणि चैवोत्तराणि । प्राजापत्यञ्चापि नक्षत्रमाहुः कूपारम्भे श्रेष्ठमाद्या मुनीन्द्राः" । तड़ागारम्भमाह वशिष्ठः "मैत्रेन्दुपौष्णोत्तररोहिणीषु देवेज्यशारीश्वरवारभेषु । प्रारम्भणं सर्वजलाशयानां कार्य्यं सितेन्द्वंशकधारलग्ने" । अत्र वापीकूपनक्षत्राणां पार्थक्येनाभिधानात् तड़ागारम्भार्थमिदं वचनमवसीयते बहुवचनमाश्रयाभिप्रायेण सर्वशब्दोपादानं छन्दःपरिपूरणार्थं तत्र कूपतड़ागवचनेषु सदृशनक्षत्रत्यागावशिष्टानां मेलने त्रयोदश नक्षत्राणि भवन्ति तत्र संक्षेप्नुकामेन व्यवहारतत्त्वकर्त्रा सर्वजलाशयानामारम्भे सामान्यतो जलाशयत्वसाधर्म्यादेतानि त्रयोदश भान्युक्तानि तान्येव च ग्रन्थकर्त्तोक्तानि । तत्र वापीकूपतड़ागानां भेदो लोकप्रसिद्ध एव यत्तु पुनर्वशिष्ठेनोक्तं "शशाङ्कतोयेशकरार्यमित्रध्रुवाम्बुपित्र्ये वसु रेवतीषु । उद्यानवाप्यादितड़ागकूपकार्य्याणि विप्र न जलं ध्रुवं स्यात्" । तज्जीर्णोद्धारविषयं प्रागुक्तवाक्ये प्रारम्भणपदोपादानाच्च नूतनखननविषयमिति पुनरुक्तिपरिहारः ।" पी० धा० ।

अधिकं जलाशयोत्सर्गशब्दे ३०७८ पृष्ठादावुक्तम् । अत्र राहुसम्मुखनिषेधः मु० चि० पी० उक्तो यथा "देवालये गेहविधौ जलाशये राहोर्मुखं शम्भुदिशो विलोमतः । मीनार्कसिंहार्कमृगार्कतस्त्रिभे खाते मुखात् पृष्ठविदिक् शुभा भवेत्" । मु० चि० ।

"देवालये इति । अत्र यथासङ्ख्यं सम्बन्धः । देवालयप्रारम्भे राहोर्मुखं मीनार्कतस्त्रिराश्यवस्थिते सूर्य्ये ऐशानीतो विलोमतो विपरीतं विदिक्षु वायव्यादिषु राहोर्मुखं स्यात् यथा मीनमेषवृषराश्यवस्थिते सूर्य्ये राहोर्मुखम् ऐशान्याम् । मिथुनकर्कटसिंहराश्यवस्थिते सूर्य्ये वायव्यां राहुमुखम् । कन्यातुलावृश्चिकस्थे सूर्य्ये नैर्ऋत्यां राहुमुखम् । धनुर्मकरकुम्भराश्यवस्थे सूर्य्ये आग्नेय्यां राहोर्मुखम् इत्यर्थः । एवं गृहारम्भेऽपि सिंहार्कतस्त्रिराश्यवस्थितेऽर्के विलोमतः ऐशान्यां राहुमुखम् । वृश्चिकादित्रये वायव्यां कुम्भादित्रये नैर्ऋत्याम् । वृषादित्रये आग्नेय्यां राहुमुखं स्यात् । जलाशयारम्भेऽपि मकरार्कतस्त्रिराश्यवस्थेऽर्के विलोमतः ऐशान्यां राहुमुखं स्यात् । मेषादितः त्रिभिर्वायव्याम् । कर्कादितस्त्रिभिर्नैर्ऋत्याम् । तुलादितस्त्रिभिः आग्नेय्यां राहुमुखं स्यादित्यर्थः । फलमाह खात इति । देवालयादिविषयके खाते भूमिशोधने कर्त्तव्ये सति राहुमुखाक्रान्तदिशः सकाशात् पृष्ठवर्त्तिनी दिक् शुभा भवेत् यथा

देवालयविषये मीनादित्रिराशिस्थितसूर्य्यत्वेन ऐशान्यां राहुमुखम्। तत्पृष्ठविदिक् आग्नेयी तस्यां प्रथमखातप्रारम्भः शुभद इत्यर्थः। मिथुनादिराशित्रयस्थे सूर्य्ये राहुमुखं वायव्यां तत्पृष्ठविदिगैशानी तस्यां खातारम्भः शुभः। एवं सर्वत्र। तथैव गृहविधौ अपि राहुमुखं कस्यां दिश्यस्ति इत्यवधार्य्य तत्पृष्ठविदिशि खातः शुभफल इत्यर्थः। यतः। सर्पस्य विदिक् व्याप्ता। यथा। ऐशान्यां मुखम्। वायव्यामुदरम्। नैरृत्यां पुच्छम् आग्नेय्यां पृष्ठम्। अतः खाते आग्नेयी सम्यक्। एवमन्यत्राप्यूहनीयम् यदाह विश्वकर्मा "ईशानतः सर्पति कालसर्पो विहाय सृष्टिं गणयेद्विदिक्षु। शेषस्य वास्तोर्मुखमध्यपुच्छं त्रयं परित्यज्य खनेच्चतुर्थम्" इति। ज्योतिश्चिन्तामणौ "वृषार्कादित्रिकं वेद्यां सिंहादि गणयेद्गृहे। देवालये च मीनादि तड़ागे मकरादिषु"। तदारम्भतदुत्सर्गौ च समयाशुद्धौ न कार्य्यौ कालाशुद्धिशब्दे तत्प्रमाणं दृश्यम् "एतेनाखानि शाखानवनियच्छ इरित्पर्णपूर्णद्रुमाली व्यालीढ़ोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तड़ागः" नैष०।

**तड़ाघात** पु० "उच्चैः करिकराक्षेपे तड़ाघातं विदुर्बुधाः" इत्युक्ते तटाघाते वप्रक्रीड़ायाम् शब्दकल्पद्रुमः। तच्चिन्त्यं तत्र वाक्ये तटाघातमित्येव पाठः तड़ेति पाठः लिपिकरप्रमादकृतः। [त्रि०।

**तड़ि** पु० तड–आघाते भावादौ इन्। १आघाते २तत्कर्त्तरि

**तड़ित्** स्त्री ताड़यत्यभ्रम् चुरा० तड़–इति नि० ह्रस्वः। १विद्युति अमरः। "जलदास्तड़िल्लुलितकान्तकान्तस्वराः" "घनं घनान्ते तड़ितां गुणैरिव" माघः। "योगस्तड़ित्तोयदयोरिवास्तु" रघुः।

तड़ित्सम्भवादिस्तु "तुजलजलधिमध्ये वाड़वोऽग्निः स्थितोऽस्मात् सलिलभरनिमग्नादुत्थिता धूममालाः। वियति पवननीताः सर्वतस्ता द्रवन्ति द्युमणिकिरणदीप्ता विद्युतस्तत्स्फुलिङ्गाः"। "अकस्माद्दैद्युतं तेजः पार्थिवांशकमिश्रितम्। वात्यावदुभ्रमदावाते प्रतिकूलानुकूलयोः। वायोस्तत् पतति प्रायो ह्यकालप्राज्यवर्षणे। यतः प्रावृषि नैवैते पांसवः प्रसरन्ति हि। तत् त्रेधा पार्थिवं चाप्यं तैजसं तड़िदुत्थितम्। ततो निर्म्भरदाहैश्च भूमिस्थैरनुभूयते" सि० शि० टीका। २अन्तिके निघण्टुः ३हिंसायां निघण्टुः "तड़ित् आखण्डनेत्युपक्रमे "त्रयस्त्रिंशत्वधकर्म्माणः" इति तदुक्तेः

**तड़ित्प्रभा** स्त्री तड़ितः प्रभेव प्रभा यस्याः। कुमारानुचरमातृभेदे। "केशयन्त्री त्रुटिनामा क्रोशनाऽथ तड़ित्प्रभा" भा० शल्य० ४७अ० कुमारानुचरमातृगणोक्तौ। २तड़ित्तुल्यदीप्तियुते त्रि०।

**तड़िल्वत्** पु० तड़ित् विद्यतेऽस्य मतुप् मस्य वः तान्तत्वेन अपदान्तत्वात् न तस्य दः। १मेघे "चलिताचलवर्षमाणा गम्भीरविराविणस्तड़िल्वन्तः" वृ० स० ३२ अ० २मुस्तके च अमरः। ३तड़िद्विशिष्टे त्रि० स्त्रियां ङीप् "समुदितन्निचयेन तड़िल्वतीम्। लघयता शरदम्बुदसंहतिम्" किरा०।

**तड़िद्गर्भ** पु० तड़ितो गर्भेऽस्य। मेघे "तड़िद्गर्भं ऋतवः समुद्राः" श्वेताश्व० उप० ४ अ०।

**तड़िन्मय** त्रि तड़िदात्मकः तड़ित्+मयट्। तड़ित्स्वरूपे "तड़िन्मयैरुन्मिषितैर्विलोचनैः" कुमा०।

**तण्ड** पु० तडि–अच्। १ऋषिभेदे तस्य गोत्रापत्यम् गर्गा० यञ्। ताण्ड्य तद्गोत्रापत्ये पुंस्त्री०। यूनि फक्। ताण्ड्यायन तदीये यून्यपत्ये पुंस्त्री०। तण्डशब्दस्य वतण्डशब्देन समं द्वन्द्वे कार्त्तकौजपा० पूर्वपदप्रकृतिस्वरः। भावे अ। २आहतौ स्त्री।

**तण्डक** पुंस्त्री० तडि–ण्वुल्। १खञ्जने, स्त्रियां ङीप्। २फेने, ३समासप्राये वाक्ये, ४गृहदारुणि, ५तरुस्कन्धे च न० मेदि० ६मायावहुले, उपघातके त्रि० परिष्कारे पुंन० शब्दार्थचि०।

**तण्डि** पु० कृतयुगोत्पन्ने ऋषिभेदे तत्कथा भा० आनु० १५ अ०। "ऋषिरासीत् कृते तात! तण्डिरित्येव विश्रुतः दश वर्षसहस्राणि तेन देवः समाधिना। आराधितोभक्तेन तस्योदर्कं निशामय" इत्यादिका। महादेववराच्च तत्सुतस्य यजुर्वेदीयताण्डिनशाखाभेदे कल्पसूत्रकर्त्तेति तत्रैव १६ अ० उक्तं यथा "अक्षयश्चाव्ययश्चैव भविता दुःखवर्ज्जितः। यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः। ऋषीणामभिगम्यश्च सूत्रकर्त्ता सुतस्तव। मत्प्रसादाद्द्विजश्रेष्ठ! भविष्यति न संशयः" "सूत्रकर्त्ता ताण्डिन इति यजुर्वेदे शाखाविशेषस्तत्र कल्पसूत्रकर्त्तेति" नीलकण्ठः। [नन्दिनौ नन्दिकेश्वरः" मल्लिनाथधृतकोषः।

**तण्डु** पु० शिवद्वारपालभेदे नन्दिकेश्वरे "नन्दी भृङ्गिरिटस्तण्डु

**तण्डुरीण** पु० तण्डुं+अस्त्यर्थे उरच् तत्र भवः ख। १कीटमात्रे २वर्वरे त्रि० तण्डुले भवः ख रस्य लः। ३तण्डुलोदके न० मेदि०।

**तण्डुल** पुंन॰ तडि—उलच्। निस्तुषधान्ये। "प्रस्वेदोऽवगतं प्रोक्तं सतुषं धान्यमुच्यते। निस्तुषस्तण्डुलः प्रोक्तः स्विन्नमन्नमुदाहृतम्" ब्रा॰न॰। "शालितण्डुलप्रस्थस्य कुर्यादन्नं सुसंस्कृतम्। सूर्याय चरुकं दत्त्वा सप्तम्यान्तु विशेषतः। यावन्तस्तण्डुलास्तस्मिन्नैवेद्ये परिसंख्यया। तावद्वर्षसहस्राणि सूर्यलोके महीयते" ति॰ त॰। "तण्डुलो मेह जन्तुघ्नः स नयस्त्वतिदुर्जरः"। वैद्य॰"भृष्टस्तु तण्डुलो रूक्षो सुगन्धिः कफनाशनः। पित्तकारी स विज्ञेयः" राजव॰। तस्य किणशब्देन समा॰ राजद॰ पूर्वनि॰। क्षीरकस्य २मानभेदे "चितसर्षपाष्टकं तण्डुलो भवेत् तण्डुलैस्तु विंशत्या" इ॰ स॰ ८॰ अ॰।

**तण्डुलपरीक्षा** स्त्री तण्डुलेन परीक्षा। दिव्यभेदे तद्विधानं वीरमि॰ उक्तं यथा पितामहः

"तण्डुलानां प्रवक्ष्यामि विधिम्भक्षणचोदितम्। चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः" इति। चौर्य्यग्रहणमर्थविवादप्रदर्शनार्थम् "तदर्थाथस्य तण्डुलाः" इति धनविवादे कात्यायनेनोक्तत्वात्। पूर्वेद्युर्यत्कर्त्तव्यं तत् सएवाह "तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित्। मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः। स्नानोदकेन सम्मिश्रान् रात्रौ तत्रैव वासयेत्। आवाहनादिपूर्वन्तु कृत्वा रात्रौ विधानतः"इति। शुचिः प्राड्विपाकः सूर्य्यस्थाने धर्मावाहनादिहोमान्तं सर्वदिव्यसाधारणविधिं कृत्वा आदित्यस्नानोदकेन शुक्लान् शालितण्डुलानाप्लाव्य रात्रावेवं कृत्वा तत्रैव प्रातःकालपर्य्यन्तं स्थापयेदित्यर्थः। स्नानोदकं देवताया इत्याह कात्यायनः "देवतास्नानपानीयं दिव्यतण्डुलभक्षणे" इति। प्रातः कर्त्तव्यमपि स एवाह "प्रभाते कारिणे देया आदित्याभिमुखाय त्विति"। कारिणे शोध्याय। देयाः तण्डुला इत्यनुषङ्गः। भक्षणञ्च सोपवासेन सूर्य्यालयमध्य एव कर्त्तव्यमित्याह बृहस्पतिः "सोपवासः सूर्य्यगेहे तण्डुलान् भक्षयेच्छुचिरिति"। शोध्यानुष्ठेयमनुवादव्याजेन दर्शयति पितामहः "प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम्। तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः" इति। भक्षयित्वा भक्षणं कारयित्वा हेतुमतोणिजन्तस्य भक्षेरयं प्रयोगः। पत्रे विशेषं स एवाह "भुर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य त्विति"। शुद्ध्यशुद्ध्यवधारणोपायं स एवाह "शोणितं दृश्यते यस्य हनुस्तालु च शीर्य्यते। गात्रञ्च कम्पते यस्य तमशुद्धं विनिर्दिशेत्" इति। बृहस्पतिरपि "शुद्धः स्यादक्षतनिष्ठीवी रक्तमिश्रे तु दोषभागिति"। कात्यायनोऽपि "शुक्लनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथेति"। "अपोऽग्निरुदकञ्चैव विषङ्कोषस्तथैव च। तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः।" इति पितामहस्मृतिः। "तण्डुलाश्चैव कोषस्य शङ्कास्वेव न संशयः" इति मिताक्षराधृतस्मृतिः।

**तण्डुला** स्त्री ताडि—उलच् नि॰ नुट् ह्रस्वश्च। १मद्यासमज्ञायाम् २विडङ्गे च राजनि॰। ३तण्डुलीयशाके यवतिक्तायां स्त्री ४शशाण्डुल्याम् स्त्री राजनि॰ गौरा॰ङीष्।

**तण्डुलाम्बु** न॰ तण्डुलक्षालितमम्बु—शा॰ त॰। तण्डुलक्षालनोदके (चेलुनि) तण्डुलोदकादयोऽप्यत्र। "जलमष्टगुणं दत्त्वा दत्त्वा पलं कण्डितण्डुलात्। भावयित्वा ततो देयं तण्डुलोदककर्मणि" वैद्यकपरिभाषा।

**तण्डुलिकाश्रम** पु॰ न॰ तीर्थभेदे जम्बूमार्गादपावृत्य गच्छेत्तण्डुलिकाश्रमम्। न दुर्गतिमवाप्नोति ब्रह्मलोकं च गच्छति" भा॰ व॰ ८२ अ॰। तण्डूलिकाश्रममिति दीर्घपाठः क्वाचित् कः, स च लिपिकरप्रमादकृत इत्यन्ये।

**तण्डुलीक** पु॰ तण्डुलीयक+पृषो॰ यलोपः। तण्डुलीयक शाके शब्दरत्ना॰।

**तण्डुलीय** पु॰ तण्डुलाय तद्भक्षणाय हितं छ। (नुडनटे) (चाँपानटे) १शाकभेदे २विडङ्गे च। स्वार्थे क। तण्डुलीयक उक्तशाके अमरः।

"तण्डुलीयो मेघनादः कोन्द्रस्तण्डुलेरकः। भाण्डीरस्तण्डुलीबीजो विषघ्नश्चाल्पमारिषः। तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित्। सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः"। तद्भेदः जलतण्डुलीयं शास्त्रे कञ्चटमिति प्रसिद्धम्। पानीयतण्डुलीयो यस्तत्कञ्चटमुदाहृतम्। कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु" भावप्र॰ स्वार्थे के कापि अत इत्वम्। तण्डुलीयिका विडङ्गे स्त्री राजनि॰। तण्डुलीबीजोऽप्युक्तशाके पु॰ भावप्र॰।

**तण्डुलु** पु॰ तण्डुल+पृषो॰। विडङ्गे शब्दर॰। [हेमच॰।

**तण्डुलेर** पु॰ तण्डुल+स्वार्थे बा॰ ढ्र। तण्डुलीयकशाके

**तण्डुलौघ** तण्डुलात् तत्क्षालनादुत्तिष्ठति उद्+स्था—क। (चेलुनि) तण्डुलाम्बुनि राजनि॰। तण्डुलाम्बुशब्दे दृश्यम्।

**तण्डुलौघ** पु० तण्डुलानामोघ इव। (वेंडवाँस) १वेणुवंशे शब्दच० ६त०। २तण्डुलसमुदाये च। [परीतत् मुग्ध०।

**तत्** त्रि० तन+क्विप् अन्त्यलोपे तुक्। विस्तारके अमरः।

**तत** न० तन–क्त। १वीणादिवाद्ये अमरः २विस्तारिते ३व्याप्ते च त्रि०। ४वायौ पु० मेदि०। भावे क्त। ५विस्तारे ६सन्ताने च न०। तन्यते अन्वयोऽस्मात् तन्–नाम्नि अपादाने कर्मणि वा क्त तक् वा। ८पितरि ९पुत्रे च पु०। "कारुरहं ततो भिषक्" ऋ० ९।११२।३ तत इति सन्ताननाम तन्यतेऽस्मात् ततः पिता तन्यतेऽसौ ततः पुत्रो वा" भा० इमामृचमधिकृत्य। तत इति सन्तानस्य नाम पितुर्वा पुत्रस्य वा" निरु०। "सततस्वप्रभङ्गीनं मिन्नकीकृत्य षड्जम्" माघः। "ततं वीणादिवाद्य मुदितम्" मल्लि०। "सहोवाच पितरं तत! कस्मै मां दास्यसीति" कठो०। "हे तत! हे तात!" भा० "यस्य निश्वसितं वेदा येन सर्वमिदं ततम्" माधवः। ततं विस्तारितं व्याप्तं वेत्यर्थः।

**ततनुष्टि** पु० ततं धर्मसन्ततिं नुदति वष्टि कामयते कामान् वा नुद-ड वश-क्तिच् कर्म० शक०। १धर्मसन्ततिनोदकधर्मसन्ततिकामुके। "अपाप शक्रस्ततनुष्टिमूहति" ऋ० ५।३४।३ ततं धर्मसन्ततिं नुदति वष्टि कामयते कामान् ततनुष्टिः" भा० निरुक्ते अन्यथा निरुक्तं यथा "शक्तितनिषुं धर्मसन्तानादपेतमलङ्करिष्णुम् ६।१९। तेन २तदर्थे च। [कदल्याम् शब्दच०।

**ततपत्री** स्त्री ततं पत्रं यस्याः जातित्वात् ङीष्।

**ततम** त्रि० तेषां मध्ये एकस्य निर्द्धारणे तद्+डमच्। तेषां मध्ये निर्द्धारिते एकस्मिन् "एतमेव पुरुषं ततममपश्यत्" ऐत० उ०। [मध्ये निर्द्धारिते एकस्मिन्।

**ततर** त्रि० तयोर्मध्ये एकस्य निर्द्धारणे तद्+डतरच्। तयो-

**ततस्** अव्य० तद्+सार्वविभक्तिस्तसिल्। तस्मादित्याद्यर्थे "ततस्ततस्त्या विनियन्तुमक्षमाः" माघः। प्रथमार्थे ततो भवान्। द्वितीयार्थे तत्रभवन्तम्। सप्तम्यर्थे ततस्त्या तृतीयार्थे "यतोयतः षट्चरणोऽभिवर्त्तते ततस्ततः प्रेरितवामलोचना" शकु०। हेतुभूतयो र्द्वयोर्मध्ये एकस्यातिशये आसु तरप् च। ततस्तराम् विग्रहोक्तार्थे हेतुभूतानां बहूनां मध्ये एकस्यातिशये आसु तमप् च" ततस्तमाम् विग्रहोक्तार्थे अव्य०। [विनियन्तुमक्षमाः" माघः।

**ततस्त्य** त्रि० ततस्तत्र भवः त्यप्। तत्र भवे "ततस्ततस्त्या

**ततामह** पु० ततस्य पितुः पिता "पितरि डामहः" इत्यत्र पितृशब्दस्यार्थपरत्वं न स्वरूपपरत्वम्। पितामहे "अस्माकं तावकानमवनतानां ततामह। तव चरणयुगलध्यानबद्ध हृदयनिगड़ानाम्" भाग० ६।९।३९ क्वचित् पुस्तके ततामहेत्यत्र तततत इत्येव पाठः। सोऽपि तदर्थे एव।

**तति** स्त्री तन-क्तिन्। १श्रेणौ हेमच०। २समूहे च। "विश्रब्धं क्रियतां वराहततिभिः मुस्ताक्षतिः पल्वले" शकु०। "विभर्त्ति जनयन्नयमुदमपामपायधवला बलाहकततीः" माघः। "तत्र हेतिततिहतिश्रान्ता अमात्याः" दशकुमा० तत् परिमाणं येषां डति। २तत्परिमाणे त्रि० ब० व० अयञ्च षट्संज्ञकत्वात् त्रिषु समः। "ष्णान्ताः षट्" "डति च" पा० तस्य षट्संज्ञा विहिता "षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययाः" अमरः। "बहुगणवतु डति च संख्या" पा० अस्य संख्याकार्यातिदेशः। ततः जसः शसश्च लुक् तति पुरुषाः सन्ति तति पुरुषान् पश्य। ततः प्रकारे धाच्। ततिधा ततिप्रकारे अव्य० "तावत्तेजस्ततिधा वाजिनानि" अथ० १२।२।३।२।

**ततिथी** स्त्री तावतीनां पूरणी तावत्+डट् तिथुडागमः ङीप् वेदे अवशब्दलोपः। तावतीनां पूरणीभूतस्त्रियाम् "स यतिथीं तत्समां परिदिदेश ततिथीं समां नावमुपकल्प्योपासाञ्चक्रे" शत० ब्रा० १।८।१।५। यावतिथीं तावतिथीमिति प्राप्ते छान्दसोऽवशब्दलोपः" भा०।

**ततुरि** त्रि० तुर्व–हिंसायाम् कि-द्वित्वं पृषो०। १हिंसके "सद्यो द्युम्ना तिरते ततुरिः" ऋ० ६।६८।७। "ततुरि हिंसकः। तॄ–कि द्वित्वं पृषो०। २तारके च "ददृश्मित्रा वरुणा ततुरिम्" ४।३९।२। "ततुरिं तारकम्" भा०

**तत्कर** त्रि० तत् करोति तद्+कृ हेत्वादावपि हेतुः ढः। तत्पदार्थकारके।

**तत्काल** पु० कर्मधा०। वर्त्तमानकाले १तदात्वे अमरः। २तस्मिन् काले च। स कालो यस्य। ३तत्कालवृत्तौ त्रि०। "शुचिस्तत्कालजीवी कर्म कुर्यात्" स्मृतिनिबन्धेषु कल्प्या श्रुतिः। "प्रतिनिधौ तत्कालात्" कात्या० श्रौ० १।४।१५। स कालो यस्यासौ तत्कालः भावप्रधानो निर्देशः प्रतिनिधेस्तत्कालत्वादित्यर्थः। यतः प्रतिनिधेः स एव कालो यो मुख्यद्रव्यस्याभावः" कर्कः। "प्रायश्चित्तं तत्कालम्" कात्या० श्रौ० १।१।२२।

**तत्कालधी** त्रि० तस्मिन् उचिते काले धीर्बुद्धिर्यस्य। अनिष्टादि निवारणाय झटिति प्रत्युत्पन्नबुद्धौ जने हेमच०।

**तत्क्रिय** त्रि० वेतनं विना स्वभावतः सा क्रिया कर्म यस्य।

कर्मकरणशीले, वेतनं विना स्वभावतः कर्मकरे अमरः।

**तत्क्षण** पु० स चासौ क्षणः कालः। सद्योऽर्थे हेमच०। "विवक्षितामर्थविदस्तत्क्षणप्रतिसंहृताम्" "आप्नेन तत्क्षणा भिषजेव तत्क्षणम्" माघः "सेकान्ते मुनिकन्याभिस्तत्क्षणो ज्झितवृक्षकम्" रघुः।

**तत्त्व(त्व)** न० तस्य भावः, तन-क्विप् तुक् ततो भावो वा त्व वा तलोपः। १याथार्थ्ये, २स्वरूपे, ३ब्रह्मणि च अमरः ४अनारोपितस्वरूपे, परमात्मनि, "तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम सर्वनाम तस्य भावः। सर्वस्मिन् दृश्ये बाध्यमानेऽपि तद्बाधाधिष्ठानत्वेन स्वयमबाध्यमानमनारोपितं स्वरूपं तत्त्वमिति विवरणकाराः। ५विलम्बिते नृत्यवाद्यादौ, ६चेतसि, ७वस्तुनि, ८साङ्ख्योक्तेषु प्रकृत्यादिषु पञ्चविंशतौ पदार्थेषु त्रिका०। "वेदान्ता बहुतर्ककर्कशमतिग्रस्ताः परं मायया भाट्टाः कर्मफलाकुला हतधियो द्वैते हि वैशेषिकाः। अन्ये भेदरता विवादकलहास्ते तत्त्वतो वञ्चितास्तस्मात् सिद्धमतं स्वभावकहृतं धीरः परं संश्रयेत्"। ९सत्त्वरजस्तमःसु। तत्र याथार्थ्ये "इत्यष्टाविंशतिस्थाने तत्त्वं वक्ष्यामि यत्नतः" रघु०। श्रीतत्त्वचिन्तामणिः तत्त्वविवेकः। तत्त्वचूडामणिः तत्त्वदीपिका। प्रमाणप्रमेयेत्याद्युपक्रमे "तत्त्वज्ञानान्निःश्रेयसाधिगमः" गौ०सू० "कार्यं सोऽवेक्ष्य शक्तिञ्च देशकालौ च तत्त्वतः" मनुः। "सतश्च सद्भावोऽसतश्चासद्भावः। सत् 'सत्' इति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। असच्चासत्' इति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति"। वात्स्या० प्रस्तावना। प्रकृत्यादिपदार्थे। "एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्" सां० कौ०। "तत्प्रतिषेधार्थं तत्त्वाभ्यासात्" पात० सू०। १०स्वभावे निस्तत्त्वाः निःस्वभावा इत्यर्थः प्रकृत्यादौ पुंन०केचित्। "यस्यापि देवस्य गुणान् समग्रांस्तत्त्वांश्चतुर्विंशतिमाङ्कुरेके" हरिवं० २७६ अ०। ब्रह्मणि "वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" भाग०१।२।११ अनारोपितं तत्त्वमिति वेदान्तिनो वदन्ति। पदार्थे। "शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य" सा० सू०। मतभेदे पदार्थभेदा यथा "सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव तत्त्वमिति शून्यवादिनो बौद्धाः। पृथिव्यादीनि चत्वारि भूतानि तत्त्वानीति चार्वाका आहुः। जीवाजीवाख्ये द्वे तत्त्वे इत्याहेताः। जीवाकाशधर्माधर्मपुद्गलास्तिकायाः पञ्चतत्त्वानीत्याहेतैकदेशिनः। जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षाः सप्त तत्त्वानीत्यपरे आर्हतैकदेशिनः। स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वमिति द्वैतवादिनः श्रीपूर्णप्रज्ञाचार्य्याः। चिदचिदीश्वरभेदेन त्रिविधं तत्त्वमिति रामानुजीयाः पतिपशुपाशभेदेन त्रिविधं तत्त्वमिति पाशुपतशास्त्रकोविदाः नकुलीशाचार्य्याः शैवाश्च। महदादीनि पञ्चविंशतिस्तत्त्वानीति सांख्याः। ईश्वराधिकानि तानि चेति, षड्विंशतिस्तत्त्वानीति पातञ्जलाः। ब्रह्मैकमेव परमार्थतत्त्वं तद्भिन्नाः मायाकल्पिता इति मायावादिनो वेदान्तिनः।

**तत्त्वज्ञान** न० ६त०। १याथार्थ्यज्ञाने, २ब्रह्मज्ञाने च। "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति गौ० सू०। ३अनारोपितवस्तुप्रत्यये। इदं सर्वं द्वैतजातमद्वितीये चिदानन्दात्मनि मायया कल्पितत्वात् तस्यैव आत्मैवैकः परमार्थसत्यः सच्चिदानन्दाद्वयोऽहमस्मीति ४परिज्ञाने। ५यथार्थ्यज्ञाने। यथा सति घटादिवस्तुनि सदिति ज्ञानम् असति च शशशृङ्गादावसदिति ज्ञानम्। "निखिललोकविमोक्षसुख्योपायं मननोपायमात्मनस्तत्त्वज्ञानमामनन्ति"। यथा आत्मा शरीरादिभ्यो भिन्न इत्याकारं ज्ञानमिति। नैयायिकाः। इतरनिवृत्तिपूर्वको ब्रह्मात्मावगम इति मायावादिनो वदन्ति। भगवद्विषयकमपरोक्षज्ञानमिति द्वैतवादिवेदान्तिन आहुः

**तत्त्वज्ञानार्थदर्शनम्** न०। तत्त्वज्ञानस्याहं ब्रह्मास्मीति साक्षात्कारस्य वेदान्तवाक्यकरणकश्रवणमननिदिध्यासनादिसर्वसाधनपरिपाकफलस्य अर्थः प्रयोजनमविद्यातत्कार्यात्मकनिखिलदुःखनिवृत्तिरूपः परमानन्दावाप्तिरूपश्च मोक्षः तस्य दर्शनम् आलोचनम्। तत्त्वज्ञानार्थे आलोचने तत्त्वज्ञानफलालोचने हि तत् साधने प्रवृत्तिः स्यात् इति तदालोचनं मोक्षार्थतत्त्वज्ञानसाधनम्।

**तत्त्वन्यास** पु० तन्त्रोक्ते विष्णुपूजाङ्गे न्यासभेदे तत्प्रकारस्तन्त्रसारे यथा "आदिकान्तानथार्याश्च जीवाद्यैकैकशो वदेत्। नमः परायेत्युच्चार्य्य ततस्तत्त्वात्मने नमः" इति गौतमीयवचनात् सर्वत्र तत्त्वपदप्रयोगः। यथा मं नमः पराय

जीवतत्त्वात्मने नमः। भं नमः पराय प्राणतत्त्वात्मने नमः। एतदुभयं सर्वगात्रे। तथा च गौतमीये "जीवं प्राणं द्वयञ्चोक्त्वा सर्वाङ्गेषु प्रविन्यसेत्। ततो हृदयमध्ये च तत्त्वत्रयञ्च विन्यसेत्"। बं नमः पराय मतितत्त्वात्मने नमः। फं नमः परायाहङ्कारतत्त्वात्मने नमः। पं नमः पराय मनस्तत्त्वात्मने नमः। इति त्रयं हृदि। नं नमः पराय शब्दतत्त्वात्मने नमः मस्तके। धं नमः पराय स्पर्शतत्त्वात्मने, नमः मुखे। दं नमः पराय रूपतत्त्वात्मने नमः हृदि। थं नमः पराय रसतत्त्वात्मने नमः गुह्ये, तं नमः पराय गन्धतत्त्वात्मने नमः पादयोः। णं नमः पराय श्रोत्रतत्त्वात्मने नमः कर्णयोः। ढं नमः पराय त्वक्तत्त्वात्मने नमः त्वचि। डं नमः पराय नेत्रतत्त्वात्मने नमः नेत्रयोः। ठं नमः पराय जिह्वातत्त्वात्मने नमः जिह्वायाम्। टं नमः पराय घ्राणतत्त्वात्मने नमः घ्राणयोः। ञं नमः पराय वाक्तत्त्वात्मने नमः वाचि। झं नमः पराय पाणितत्त्वात्मने नमः पाण्योः। जं नमः पराय पादतत्त्वात्मने नमः पादयोः। छं नमः पराय पायुतत्त्वात्मने नमः गुह्ये। चं नमः पराय उपस्थतत्त्वात्मने नमः लिङ्गे। ङं नमः पराय आकाशतत्त्वात्मने नमः मूर्ध्नि। घं नमः पराय वायुतत्त्वात्मने नमः मुखे। गं नमः पराय तेजस्तत्त्वात्मने नमः हृदि। खं नमः पराय जलतत्त्वात्मने नमः लिङ्गे। कं नमः पराय पृथिवीतत्त्वात्मने नमः पादयोः। तथा न्यासोऽभिहितः क्रमदीपिकायाम्। "इत्यच्युतीकृततनुर्विदधीत तत्त्वन्यासं सपूर्वकपराद्यरनत्युपेतम्। भूयः पराय च तदाह्वयमात्मने च नत्यन्तमुद्धरतु तत्त्वमनून् क्रमेण। सकलवपुषि जीवं प्राणमायोज्य मध्ये न्यसतु मतिमहङ्कार तत्त्वं मनश्च। कमुखहृदयगुह्याङ्घ्रिष्वथो शब्दपूर्वं गुणगणमथ कर्णादिस्थितम् श्रोत्रपूर्वम्। वागादीन्द्रियवर्गमात्मनि नसेदाकाशपूर्वं गणं मूर्द्धास्ये हृदये शिवे (लिङ्गे) चरणयोः हृत्पुण्डरीके हृदि। शं नमः पराय हृत्पुण्डरीकतत्त्वात्मने नमः हृदि। हं नमः पराय द्वादशकलाव्याप्तसूर्य्यमण्डलतत्त्वात्मने नमः हृदि। सं नमः पराय षोड़शकलाव्याप्तसोममण्डलतत्त्वात्मने नमः हृदि। रं नमः पराय दशकलाव्याप्तवह्निमण्डलतत्त्वात्मने नमः हृदि। षं नमः पराय परमेष्ठितत्त्वात्मने वासुदेवाय नमो मस्तके। यं नमः पराय पुरुषतत्त्वात्मने सङ्कर्षणाय नमो मुखे। लं नमः पराय विश्वतत्त्वात्मने प्रद्युम्नाय नमो हृदि। वं नमः पराय निवृत्तितत्त्वात्मनेऽनिरुद्धाय नमो लिङ्गे। लं नमः पराय सर्वतत्त्वात्मने नारायणाय नमः पादयोः। क्षं नमः पराय कोपतत्त्वात्मने नृसिंहाय नमः सर्वगात्रे। हृत्पुण्डरीकतत्त्वादीनां न्यास प्रमाणमाह तथा बिम्बानि द्विषड्टकयुग्युगद्दशकलाव्याप्तानीति,। गौतमीये "शं बीजं हृत्पुण्डरीके च तत्त्वं हृदि प्रविन्यसेत्। हं बीजं सूर्यमण्डलतत्त्वं हृदि प्रविन्यसेत्। सं बीजं चन्द्रमण्डलतत्त्वं तत्र प्रविन्यसेत्। रं बीजं वह्निमण्डलतत्त्वं तत्र प्रविन्यसेत्। षं बीजं परमेष्ठितत्त्वं वासुदेवञ्च मूर्द्धनि। यं बीजमथ पुंस्तत्त्वं सङ्कर्षणमथो मुखे। लं बीजं विश्वतत्त्वञ्च प्रद्युम्नञ्च हृदि न्यसेत्। वं बीजं निवृत्तितत्त्वञ्च अनिरुद्धमुपन्यसेत्। लं बीजं सर्वतत्त्वञ्च पादे नारायणं न्यसेत्। क्षं बीजं कोपतत्त्वञ्च नृसिंहं सर्वगात्रके। एवं तत्त्वानि विन्यस्य प्राणायामं समाचरेत्" अन्येऽपि तत्त्वन्यासाः श्रीविद्यातारकालीनामपि पूजाङ्गं तन्त्रसारोक्ता द्रष्टव्या

**तत्त्वरश्मि** पु॰ तन्त्रोक्ते (स्त्रीँ) वधूबीजे "नादबिन्दुसमाक्रान्तस्तत्त्वरश्मिसमन्वितः" इत्यस्य व्याख्यायां "तत्त्वरश्मिर्वधूबीजमिति" तन्त्रसा॰

**तत्त्वविद्** त्रि॰ तत्त्वं वेत्ति विद्-क्विप्। पदार्थानां याथार्थ्यज्ञातरि "तत्त्ववित्तु महाबाहो! गुणकर्मविभागयोः" गीता। २परमेश्वरे पु॰ "तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः" विष्णुस॰। "तत्त्वं स्वरूपं यथावद्वेत्तीति तत्त्ववित्" भा॰। [हिङ्गुपत्र्यां शब्दार्थचि॰।

**तत्पत्री** स्त्री तन-क्विप् तत् पत्रमस्याः ङीप्।

**तत्पद** न॰ तदिति पदम्। तच्छब्दे "तत्त्वमसि श्वेतकेतो इत्यादिवाक्यस्थं तत्सत्यं स आत्मेत्यादि" श्रुतिस्थञ्च तत्पदं ग्राह्यम्।

**तत्पदलक्ष्यार्थः** पु॰ तत्पदस्य लक्ष्योऽर्थः अज्ञानादिसमष्ट्युपाध्युपहिताधारभूतेऽनुपहितचैतन्ये चिदेकरसरूपिणि। [पदाभिधेये।

**तत्पदवाच्यः** त्रि॰ ६त॰। तत्त्वमस्यादिवाक्यस्थतत्पदार्थे तत्

**तत्पदवाच्यार्थ** पु॰ ६त॰। तत्त्वमस्यादि वाक्यस्य तत्पदस्य वाच्यार्थो अज्ञानादिसमष्टिः एतदुपहितसर्वज्ञत्वादिविशिष्टचैतन्यम् एतदनुपहितचैतन्यञ्चैतत् त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवतीति व्युत्पादितेऽर्थे।

**तत्पदार्थः** पु॰ तत्त्वमस्यादिवाक्यस्थस्य तत्पदस्यार्थः। जगत्

कारणे परमात्मनि । "यत् जगत्कारणं तत्त्वं तत्-
पदार्थः स उच्यते" । एवं तत्पदार्थो निरूपितः इदानीं
त्वंपदार्थो निरूप्यते" वेदान्तसा० । तत्पदत्वंपदवाच्य-
योर्विरोधेनाभेदाभावेऽपि लक्ष्यार्थयोर्यथाऽभेदस्तथा
विवेकचू० न्यरूपि यथा
"तत्त्वम्पदाभ्यामभिधीयमानयोर्ब्रह्मात्मनोः शोधितयोर्यदी-
त्थम् । श्रुत्या तयोस्तत्त्वमसीति सम्यक् एकत्वमेव प्रति-
पाद्यते मुहुः । ऐक्यं तयोर्लक्षितयोर्न वाच्ययोर्निग-
द्यतेऽन्योऽन्यविरुद्धधर्मिणोः । खद्योतभान्वोरिव राज-
भृत्ययोः कूपाम्बुराश्योः परमाणुमेर्वोः । तयोर्विरो-
धोऽयमुपाधिकल्पितो न वास्तवः कश्चिदुपाधिरेषः ।
ईशस्य माया महदादिकारणं जीवस्य कार्यं शृणु
पञ्चकोषम् । एतावुपाधी परजीवयोस्तयोः सम्यग्निरासे
न परो न जीवः । राज्यं नरेन्द्रस्य भटस्य खेटकस्तयो-
रपोहे न भटो न राजा । अथात आदेश इति श्रुतिः
स्वयं निषेधति ब्रह्मणि कल्पितद्वयम् । श्रुतिप्रमाणानु-
गृहीतबोधात्तयोर्निरासः करणीय एवम् । नेदं नेदं
कल्पितत्वान्न सत्यं रज्जुदृष्टव्यालवत् स्वप्नवच्च । इत्थं
दृश्यं साधुयुक्त्या व्यपोह्य ज्ञेयः पश्चादेकभावस्तयोर्यः ।
ततस्तु तौ लक्षणया सुलक्ष्यौ तयोरखण्डैकरसत्वसिद्धये ।
नालं जहत्या, न तथाऽजहत्या, किन्तूभयार्थात्मिकयैव
भाव्यम् । स देवदत्तोऽयमितीह चैकता विरुद्धधर्मांश-
मपास्य कथ्यते । यथा, तथा तत्त्वमसीतिवाक्ये विरुद्ध-
धर्मानुभयत्र हित्वा । संलक्ष्य चिन्मात्रतया सदात्मनो-
रखण्डभावः परिचीयते बुधैः" ।

**तत्पदाभिध:** त्रि० तत्त्वमस्यादिवाक्यस्थतत्पदस्याभिधा
यत्र । तत्पदवाच्ये । "मायोपाधिर्जगद्योनिः सर्वज्ञत्वादि
लक्षणः । परोक्षशवलः सत्याद्यात्मकस्तत्पदाभिधः" ।
वेदान्तकारिका ।

**तत्पर** त्रि० तत् परमुत्तमं यस्य । १तन्नते, २तदासक्ते च
अमरः । ५त० । तस्मात् परे ३वस्तुनि च । परता च
कालिकी दैशिकी च । तत्र कालिकी "परश्वस्तत्परे-
ऽहनि" अमरः दैशिकी । "गण्डौ कपोलौ तत्परे हनू"
अमरः । "परः पूर्वेण संयुक्तस्ततत्परस्तेन तेन च"
लीला० । "अक्ष्णोर्निमेषस्य खराम(३०)भागः स तत्परस्त-
च्छतभाग उक्तः" सि० शि० निमेषस्य त्रिंशद्भागा-
त्मके ४सूक्ष्मकालभेदे पु० ।

**तत्परायण** त्रि० तदेव परमयनं यस्य यत्नम् । तद्गासक्ते ।

**तत्पुरुष** "तत्पुरुषः" इत्यधिकृत्य पा० विहिते १समासभेदे
"उत्तरपदार्थप्रधानस्तत्पुरुष" इति तस्य लक्षणं
प्रायिकम् अर्द्धपिप्पल्यादि तत्पुरुषे उत्तरपदार्थप्राधा-
न्याभावात् अव्याप्तिः पूर्वपदप्राधान्याच्चाव्ययीभावत्वा-
पत्तेरतिव्याप्तिश्च यथोक्तं वाक्यपदीये "समासस्तु चतु-
र्द्धेति प्रायोवादस्तथाऽपरः । योऽयं पूर्वपदार्थादि
प्राधान्यविषयः स च" "अयमर्थः समासः अव्ययीभावतत्पु-
रुषद्वन्द्वबहुव्रीहिभेदात् चतुर्द्धा । तत्र पूर्वपदार्थप्रधानो-
ऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः उभयपदार्थ-
प्रधानो द्वन्द्वः । अन्यपदार्थप्रधानो बहुव्रीहिः इत्यादि
लक्षणमपि प्रायिकम् । उन्मत्तगङ्गं सूपप्रति अर्द्ध-
पिप्पली द्वित्राः कुशपलाशमित्यादौ परस्परव्यभिचा-
रात् । तथाहि उन्मत्तगङ्गमित्यव्ययीभावे पूर्वपदार्थ-
प्राधान्याभावादव्याप्तिः अन्यपदार्थप्राधान्याद्बहुव्रीहिल-
क्षणातिव्याप्तिश्च "अन्यपदार्थे च संज्ञायामिति"
(अव्य०) समासात् । सूपप्रतीत्यव्ययीभावे उत्तरपदार्थ-
प्राधान्यात्तत्पुरुषलक्षणातिव्याप्तिरव्ययीभावाव्याप्तिश्च ।
"सुपः प्रतिना मात्रार्थे" इति (अव्य०) समासात् ।
अर्द्धपिप्पलीति तत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वादव्ययी-
भावातिव्याप्तिस्तत्पुरुषाव्याप्तिश्च "अर्द्धं नपुंसकमिति"
(तत्पु०) समासात् । एवं पूर्वकाय इत्यादावपि द्रष्टव्यम् ।
द्वित्रा इति बहुव्रीहावुभयपदार्थप्राधान्यात् द्वन्द्वाति-
व्याप्तिबहुव्रीह्यव्याप्तिश्च । कुशपलाशमित्यादिद्वन्द्वे समा-
हारान्यपदार्थप्राधान्याद्बहुव्रीहेरतिव्याप्तिर्द्वन्द्वाव्याप्तिश्च
स्यादिति भावः । सिद्धान्ते त्वव्ययीभावाधिकारपठितत्वं
अव्ययीभावत्वमित्यादि लक्षणं द्रष्टव्यम्" वै० भू० सा० ।
शब्दशक्तिप्रकाशिकायान्तु अन्यथा तल्लक्षणमुक्त्वा तत्र
पदार्थयोरन्वयबोधप्रकारो दर्शितो यथा
"यदीयेन सुवर्थेन युतयद्बोधनक्षमः । यः समासस्तस्य
तत्र स तत्पुरुषः उच्यते" । यदर्थगतेन सुवर्थेन विशि-
ष्टस्य यदर्थस्यान्वयबोधं प्रति यः समासः स्वरूपयोग्यः स
तदर्थस्य तदर्थे तत्पुरुषः । न तु यन्नामोत्तरं यन्नाम
यदर्थगतसुवर्थावच्छिन्नस्य यत्स्वार्थस्य बोधकं तदुत्तरं तन्ना-
म्नैव तदर्थयोस्तत्पुरुषः पूर्वकायोऽर्द्धपिप्पलीत्यादाव-
व्याप्तेः । स्तोकपक्वेत्यादौ क्रियाविशेषणैः कर्मधारय
एव महाकविसहायवित्त इत्यादौ कवित्वादाविव प्रकृते-
ऽप्येकनामार्थैकदेशे पचनादावपरनामार्थस्याभेदान्वयबोध-
कतया तथात्वसम्भवात् । स्तोकं पक्वेत्यादौ क्रमस्तादात्म्य-

षाष्ठित्वे तु तत्पुरुषः सम्भवत्येव क्रियाविशेषणैः समास एवाव्युत्पन्न इति तु न देश्यं "स्तोकनम्रा स्तनाभ्यामित्यादेः कालिदासाद्यैः प्रयुक्तत्वात् द्विगौ कर्मधारये च शाब्दिकानां तत्पुरुषत्वव्यपदेशः पदसंस्कारार्थो गौणः। विभजते। "द्वितीयादिसुबर्थस्य भेदादेष च षड्विधः। क्रियान्वयी द्वितीयादेरर्थः प्रायोऽत्र योजितः" "ग्रामगतः चैत्रनीतः ब्राह्मणदत्तः वृक्षपतितः चैत्रधनं मैत्रगतिः गृहस्थित इत्यादौ द्वितीयादिसुबर्थस्य कर्मत्व कर्तृत्वादेर्बोधभेदादेतस्य द्वितीयातृतीयादितत्पुरुषत्वेन षड्भेदाः स्वघटकैकपदार्थनिष्ठद्वितीयार्थावच्छिन्नापरपदार्थबोधकसमासत्वादेर्धर्मषट्कस्य सुवचत्वात्। इयांस्तु विशेषो यदेतेषु धात्वर्थान्वय्येव द्वितीयादेरर्थः प्रायो घटकः पीठं परितः पुण्येन सुखं शमाय विद्या दण्डाहतः गवां कृष्णा सम्पन्नक्षीरा तिलेषु तैलमित्यादिविग्रहे तत्पुरुषस्यासाधुत्वात् वर्षसुखी गिरिकाणः कुण्डलहिरण्यं घटान्यः कुबेरबलिः कर्मकुशल इत्यादौ तु तत्तद्विशेषविधेर्द्वितीयादितत्पुरुषः। ननु ग्रामगत इत्यत्र गतौ ग्रामकर्मकत्वस्य राजपुरुष इत्यत्र च पुरुषे राजसम्बन्धस्यावगमो न ग्रामादिपदेभ्यो लुप्तसुपः स्मरणात्, तल्लोपमजानतोऽप्यन्वयबोधात् सक्तुं ग्रामगत इत्यादितः सक्तुग्रामयोरभेदान्वयधीप्रसङ्गाच्च सम्पन्नं दधि पश्येत्यादाविव तत्रापि नामार्थयोरभेदान्वयबोधोपयुक्तस्य नाम्नोः समानविभक्तिप्रतिसन्धानस्याविशिष्टत्वात्। नापि ग्रामादिपदस्य ग्रामकर्मकत्वादिलक्षकत्वात् अभेदान्यसम्बन्धेन नामार्थस्यान्वयबोधं प्रत्यनुकूलस्य नामोत्तरविभक्त्युपस्थाप्यत्वस्य तादृशप्रत्ययोपस्थाप्यत्वस्य वा गत्यादावसत्त्वात्। नच ग्रामादिपदलक्षितस्य ग्रामकर्मकादेरेव तत्र गत्यादौ तादात्म्येनान्वय इति साम्प्रदायिकानाम्मतमेव साम्प्रतं तत्पुरुषस्यापि समस्यमानपदार्थयोरभेदान्वयबोधकत्वे कर्मधारयत्वापत्तेः ग्रामं गतः राज्ञः पुरुष इत्यादिविग्रहस्य समासतुल्यार्थकत्वहान्यापत्तेश्चेति चेन्न प्रत्ययान्ततत्तन्नामार्थस्यैव भेदेनान्वयबोधं प्रति तत्तन्नामोत्तरप्रत्ययोपस्थाप्यतायास्तन्त्रत्वेन ग्रामगत इत्यादौ ग्रामादिपदलक्षितग्रामकर्मत्वादेर्गत्यादौ भेदेनान्वये बाधकाभावात्। नचैवं गतौ ग्रामेत्यत्रापि ग्रामपदलक्षितस्य ग्रामकर्मत्वादेर्गत्यादौ भेदेनान्वयबोधप्रसङ्गः प्रत्ययान्तान्यतत्तन्नामोपस्थाप्यार्थस्यान्वयबोधसामान्यं प्रत्येवोत्सर्गतस्तादृशतत्तन्नामोत्तरनामोपस्थाप्यत्वस्य हेतुत्वेन तदसम्भवात्। अतएवार्द्धं पिप्पलीच्छेद इत्यादौ पूर्वपदप्रधानत्वेनानुशिष्टस्य तत्पुरुषादेरन्त्यपदार्थानां पिप्पलीप्रभृतीनाम् अर्द्धाद्यर्थे वटपटमठानामित्यादौ च सर्वपदप्रधानत्वेन द्वन्द्वस्यानन्त्यपदार्थानां घटादीनां सुबर्थे अन्वयः तथा बहुगुडो द्राक्षेत्यादौ गुडादीनामपि बहुजर्थे प्रकृत्यर्थस्य पदसमाप्तौ नाम्नः प्राग्बहुचि विधानादिति। ननु यदि नामार्थयोरपि भेदेनान्वयो व्युत्पन्नस्तर्हि ग्रामगत इत्यादौ कर्मत्वादिसंसर्गेण ग्रामादेरेव गत्यादावन्वयोऽस्तु कृतं ग्रामादिशब्दस्य ग्रामकर्मकत्वादिलक्षणयेति चेत् सत्यं विग्रहवाक्यानां समाससमानार्थकत्वरक्षणाय तत्र लक्षणास्वीकारात्। माऽस्तु वा ग्रामादिपदस्य तत्कर्मकत्वादौ लक्षणा कर्मत्वादिसंसर्गेणैव ग्रामादेर्गत्यादावन्वयसम्भवात्तथापि न क्षतिः ग्रामं गत इत्यादिविग्रहस्यापि कर्मत्वार्थकद्वितीयाद्युपसन्धानवशादेव कर्मत्वादिसंसर्गेण गत्यादौ ग्रामाद्यन्वयबोधकतया समाससमानार्थकत्वसम्भवात् ग्राममित्यादौ कर्मत्वादिधर्मिकान्वयबोधानुरोधेन द्वितीयादेः कर्मत्वाद्यर्थकत्वात्। अतएवाघटः पट इत्यादावन्यस्य असुरो दैत्य इत्यादौ विरोधिनः, अनिक्षुः शर इत्यादौ सदृशस्य, अब्राह्मणो वार्द्धुषिक इत्यादावप्रकृष्टस्य, अनुदरस्तदरन्तरुण्या इत्यादौ स्वल्पस्य, वाचकेन नञ्निपातेन स्वार्थे प्रतियोगित्वादिसम्बन्धेनैव घटादेरनुभावनेऽपि तत्रत्यतत्पुरुषे नाव्याप्तिः। पटस्याभाव इत्यर्थे प्रसज्यनञा अव्ययीभाव एव समासः प्रमाणन्तु नापटं वर्त्तते इत्याद्येव तत्र प्रयोगस्तत्पुरुषस्योत्तरपदलिङ्गकत्वनियमात् इति वृद्धाः। प्रसज्यनञाप्यपट इत्यादिस्तत्पुरुष एव साधुर्नाव्ययीभावः नञ्तत्पुरुषविधेस्तदपवादकत्वात् अतएव वादिनामविवाद इत्यादिकः किरणावल्यादौ पुंसि प्रयोग इति तु पक्षधरमिश्राः। युज्यते चोत्तरः कल्पो नचेदेवं "दुर्गते राजमातङ्गास्तस्यैवामी तुरङ्गमाः। चैत्रो ग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना" इत्यादौ राजसम्बन्धादे राजादिपदलक्ष्यत्वे तदेकदेशस्य राजादेस्तदा परामर्शो न स्यात् विशेष्यविधया वृत्त्या पूर्वोपस्थापितस्यैवार्थस्य परामर्शकत्वात् तदादिशब्दानाम् "नहि प्रजावतीयं मे त्वं तस्यै देहि कम्बलम्। नीलो मणिर्गुणः सोऽत्र भ्रात्रादिर्बोध्यते तदा"। नन्वेवम् "अनयैव ऋचा निषादस्थपतिं याजयेदिति" श्रुतौ निषादानां स्थपतिरिति व्युत्पत्त्या न तत्पुरुषः परन्तु निषादः स्थपतिरित्यर्थे कर्मधारय एवेति सिद्धान्तो

व्याहन्येत तत्पुरुषे भक्तिभिया हि तत्र कर्मधारय-स्वीकारस्तन्मूलके निषादस्थाधानेऽपूर्वविद्याप्रयुक्तिश्च कल्प्यते कल्प्यते च निषादीयतत्तदध्ययने निषेधविधिबाधात् "स्त्रीशूद्रौ नाधीयेतामिति" श्रुतौ तत्तदध्ययनेतराध्ययनपरत्वं धातोः, शूद्रपदस्य त्रैवर्णिकान्योपलक्षकत्वात्। यदि च कर्मधारय इव तत्पुरुषेऽपि न लक्षणा तदा तत्पुरुष एव तत्रोचितस्त्रैवर्णिकस्यैव निषादीयस्थपतित्वेन प्राप्तावपूर्वविद्याप्रयुक्तेस्तन्मूलकनिषेधविधिसङ्कोचस्य चाकल्प्यत्वादिति चेत् तत्पुरुषे लक्षणापक्षेऽपि किमिति कर्मधारय एव तत्राभ्युपेयते न तु तत्पुरुषः निषादानां स्थपतिरिति व्युत्पत्त्या निषादस्थपतिपदान्निषादसम्बन्धवत्त्वेन स्थपत्यनुभवसहस्रस्य सर्वसिद्धत्वेन तदनुरोधाल्लक्षणायाः क्लृप्तत्वेन तत्कल्पनाभयस्यासम्भवात् न हि निषादस्थपत्यादिपदं निषादादिसम्बन्धवत्तया स्थपत्यादिबोधने निराकाङ्क्षं तथा सति निराकाङ्क्षत्वादेव तत्पुरुषत्वासम्भवेन लक्षणापत्तेस्तद्बाधकतयोपन्यासानौचित्यात्। अथ बाधकं विना मुख्यार्थ एव श्रुतीनां प्रामाण्यं न तु प्रमाणान्तरविषयेऽपि लक्ष्यार्थे मुख्ये शब्दस्वरस इत्यादिमीमांसया तथैव सम्प्रतिपत्तेरिति चेत्तर्हि बाधकासत्त्वे कर्मधारयविधयैव वेदानां प्रामाण्यं न तु प्रमाणान्तरविषयेऽपि तत्पुरुषविधया कर्मधारयात् समासान्तरस्य दौर्बल्यमित्यादिमीमांसया तथैव प्रतिपत्तेरित्यपि किन्न रोचयेः। तत्पुरुषाद्बहुव्रीहेर्जघन्यत्वमित्यत्राप्युक्तैव रीतिरनुसर्त्तव्या न हि बहुव्रीहौ समस्तपदानां लाक्षणिकत्वादेव ततो दुर्बलत्वम्। एकपदमात्रलक्षणयापि बहुव्रीहेर्व्यवस्थाप्यत्वादित्यास्तां विस्तरः"।

स च तत्पुरुषस्त्रिविधः व्यधिकरणपदघटित समानाधिकरणपदघटित संज्ञानवबोधकसंख्यावाचकपदघटितभेदात्। तत्र संज्ञानवबोधकसंख्यापूर्वकसमानाधिकरणपदघटितस्तत्पुरुषो द्विगुः "दिक्संख्ये संज्ञायामिति सूत्रेण विहितपञ्चाम्रादिकर्मधारयादिष्वतिप्रसङ्गवारणाय संज्ञानवबोधकेति "संख्यापूर्वो द्विगुरिति सूत्राच्च संख्यापूर्वकेति। द्विमूर्द्धाद्यन्यपदार्थे तथात्ववारणाय तत्पुरुषेति। द्विगुविषयपरिहारेण समानाधिकरणपदघटिततत्पुरुषः कर्मधारयः "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति सूत्रात्। इति तद्भिन्नो व्यधिकरणपदघटितस्तत्पुरुषः यथा राजपुरुष इतित्यादि। "द्वन्द्वो द्विगुरपि चाहं सततं मद्गृहे व्ययीभावः। तत्पुरुष कर्मधारय येन स्यां मदा बहुव्रीहिः" उद्भटः
४स प्रसिद्धः पुरुषः। २रुद्रभेदे धर्मिणः तस्य पुरुषः। ३तदधिष्ठातृदेवे च। "तत्पुरुषाय विद्महे" इति गायत्री

**तत्फल** पु० तनोति क्विप् तत् विस्तीर्णं फलति विकाशते अच्। पुष्पमात्रविकाशिनि १कुवलये, २कुष्ठौषधौ ३चोरणामौषधौ च शब्दार्थ०।

**तत्र** धारणे चु० आत्म० सक० सेट् इदित्। तन्त्रयते अतितन्त्रत इदित्करणं वेदे स्वरविशेषार्थम्।

**तत्र** कुटुम्बधारणे भ्वा० प० अक० सेट् चान्द्राः। तन्त्रति अतन्त्रीत् ततन्त्र। "इतराभ्योऽपि दृश्यन्ते" पा० इत्युक्तेः प्रथमाद्यर्थे त्रल्। तत्र भवान् तत्र भवन्तमित्यादि।

**तत्र** अव्य० तस्मिन् त्रल्। तस्मिन्नित्यर्थे "तत्रापि तत्रभवतो भवसंशयालोः" नैष०। "कथं तत्र विभागः स्यादिति चेत् संशयो भवेत्" मनुः।

**तत्रत्य** त्रि० तत्र भवः अव्ययात् त्यप्। तत्र भवे त्रि०। "मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्जनैः" भाग० ३।११

**तत्रभवत्** त्रि० पूज्यार्थे नित्य० स०। पूज्ये तत्शब्दे उदा० "अद्य तत्रभवांस्त्वं च पितरं रक्ष किल्बिषात्" रामा० अयो० ११२ अ०।

**तत्साधुकारिन्** तत् साधु यथा तथा करोति कृ-णिनि सुप्सुपेति समासः। तस्य साधुकारिणि "आक्रोशन्नीव तद्धर्मतत्साधुकारिषु" पा०।

**तथा** अव्य० तेन प्रकारेण तद्+प्रकारे थाल् विभक्तित्वात्। १तेन प्रकारेणेत्यर्थे २साम्ये च अमरः। ३अभ्युपगमे ४पूर्वप्रतिवचने ५समुच्चये, ६निश्चये च मेदि०। तत्र साम्ये "यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्। तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्" मनुः। समुच्चये। "विघसो भुक्तशेषं तु यज्ञशेषं तथामृतम्" "ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथा परे" मनुः। तेन प्रकारेणेत्यर्थे "कथमुक्त्वा तथा सत्यं सुप्तामुत्सृज्य मां गतः" भा०व०११ नलोपाख्यानम्। "यथा क्रतुरस्मिन् लोके भवति तथेत्य भवति" छा० उप०। "यथा कामो भवति तथा क्रतुर्भवति" शत० ब्रा० १४।७।२।७।७सत्ये च।

**तथाकारम्** अव्य० तथा+कृ-निन्दितप्रतिवचने णमुल्। कथञ्चित् उक्तप्रकारेण कृत्वेत्यर्थे। "तथाकारमहं भोक्ष्ये" सि० कौ०।

**तथागत** पु० तथा सत्यं गतं ज्ञानं यस्य यथा न पुनरावृत्तिर्भवति तथा तेन प्रकारेण गत इति वा तथा गतः सुप्सुपेति समासः । १बुद्धमुनौ सुगते अमरः । "यथा गतास्ते मुनयः शिवां गतिं तथागतिं सोऽपि गतस्तथागतः" सर्वद०बौद्धागमः । २पूर्वोक्तप्रकारेण गते त्रि० । "नलं दृष्ट्वा तथागतम्" भा० व० ७७ अ० । "श्रियं तथागतां दृष्ट्वा ज्वलन्तीमिव पाण्डवे" भा० स० १६ अ० ।

**तथाच** अव्य० तथा च च च द्वन्द्वः । उक्तस्य दृढीकरणार्थे "निरिन्द्रियाह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः । तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि" मनुः । "एतावानेव पुरुषो यज्जायात्मा प्रजेति ह । विप्राः प्राहुस्तथाचैतद्यो भर्त्ता सा स्मृताऽङ्गना" हितो० ।

**तथात्व** न० तथा+भावे त्व । तथाभूतत्वे । "तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः" भाषाप० । "स्वरूपानन्दस्य तथात्वम्" सांख्य०सू० ।

**तथापि** अव्य० तथा च अपि च द्वन्द्वः । यद्यपीत्यनेनाक्षिप्तस्य समाधानार्थे "तथापि मम सर्वस्वं रामः कमललोचनः" उद्भटः । "यद्यपि का नो हानिः परस्य द्राक्षां रासभश्चरति । असमञ्जसमिति मत्वा तथापि तरलायते चेतः" उद्भटः । "सा चैवास्मि तथापि सुरतव्यापारलीलाविधौ" काव्यप्र० ।

**तथाभूत** त्रि० तेन प्रकारेण भूतः भू–कर्त्तरि क्त । तादृशेन रूपेण भूते । "तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयाम्" वेणी० । "स्मरस्तथाभूतमयुग्मनेत्रम्" कुमा० ।

**तथाराज** पु० तथेति राजते राज–अच् । बुद्धदेवे शब्दार्थचि० ।

**तथाविध** त्रि० तथा विधा यस्य । तथाप्रकारे "तथाविधस्तावदशेषमस्तु सः" कुमा० "अतोऽभिलाषे प्रथमं तथाविधे" । "श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः" । "प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम्" इति च रघुः "तस्य तावच्छती सङ्ख्या सङ्ख्यांशश्च तथाविधः" मनुः

**तथाहि** अव्य० तथा च हि च द्व० । १निदर्शने २प्रसिद्धमेवेत्यर्थे शब्दार्थचि० । ३उक्तार्थ दृढीकरणे ।

**तथैव** अव्य० तथा+सादृश्ये समुच्चये वा तस्यावधारणम् । तद्वदेवेत्यर्थे तत्समुच्चयावधारणे च शब्दार्थचि० "अस्ति पुत्रो वशे यस्य भार्या भर्त्तुस्तथैव च" चाणक्यः । "यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्" मनुः ।

**तथ्य** न० तथा+साधु यत् । १यद्वस्तु यथाभूतं तथारूपावस्थाने सत्ये २तद्युते त्रि० अमरः । "काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन् दाप्योदण्डं कार्षापणावरम्" मनुः । "अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन" कुमा० । "भूय एव तु मां तथ्यं वचोभिरुपबृंहय" भा० द्रो० ५५ अ० । "यदर्जुनगुणांस्तथ्यान् कीर्त्तयानं नराधम !" भा० द्रो० १५९ अ० ।

**तद्** त्रि० तन–अदि डिच्च । १पूर्वोक्ते बुद्धिस्थे,२परामर्शयोग्ये ३विप्रकृष्टविषये । ४ब्रह्मणि न० । "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीता । "अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इत्युक्तेरस्य परोक्षवाचित्वम् । बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नेऽस्य शक्तिः । बुद्धिस्थत्वं च पूर्वानुभूतसंस्कारवत्तया, तेन स्मृतिविषयत्वेन तथात्वं बोध्यम् । तदर्थे एवास्य सर्वनामता शब्दपरत्वे न तथात्वम् । अतएव "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" पा० न सर्वनामकार्यमन्यथा एतत्तयोरिति स्यात् । सर्वनामकार्यञ्च त्यदादीनामः अत्वादौ शीभावादि वृत्तिमात्रे पुंवद्भावादिश्च । स तौ ते तस्मै तस्मात् तेषां तस्मिन् इत्यादि । तस्य च टेरकच् सकः तकौ इत्यादि च । "स किं सखा साधु न शास्ति योऽधिपम्" किरा० । "तौ गुरुर्गुरुपत्नी च" रघुः । "ते तत्रहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः" "ते हिमालयमामन्त्र्य" कुमा० । "तस्मै शंशस प्रणिपत्य नन्दी" कुमा० । "तस्मिन् मघोनस्त्रिदशान् विहाय" कुमा० । तस्मात्तान्यत्र वापयेत्" स्मृतिः । वृद्धसंज्ञत्वात् छ "तदीयमातङ्गघटाविघट्टितैः" माघः । ततः तत्र तर्हि तदा इत्यादि । ५हेतौ अव्य० स्वरादेराकृतिगणत्वात् स्वरादि । "सन्तप्तानां त्वमसि शरणं तत् पयोदः प्रियायाः" मेघ० । "तदङ्गमग्र्यं मघवन् ! महाक्रतोः" रघुः । अहेतावपि ६सर्वनामसमानार्थे न० । "इन्द्रियदोषात् संस्काराच्चाविद्या" "तद् दुष्टज्ञानम्" का०सू० "तदित्यव्ययपदं सर्वनामसमानार्थकमविद्यां परामृशति साऽविद्या दुष्टज्ञानं व्यभिचारिज्ञानमतस्मिंस्तदभिज्ञानं व्यधिकरणप्रकारावच्छिन्नविशेष्यकम्" उप० वृत्तिः । ८ तदेत्यर्थे च "ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्जनार्द्दन ! तत् कर्म्मणि घोरे माम् । गीता ९ प्रसिद्धे त्रि० सर्वनामकार्य्यञ्च । "तं केशपाशं प्रसमीक्ष्य कुर्य्युः" कुमा० । तत्र ब्रह्मणि "तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः । दान

क्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिरिति” गीता। तदिति ब्रह्माभिधानमुच्चार्य्य अनभिसन्धाय च कर्म्मणः फलमित्यर्थः। “तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो” छा० उ०। तत्पदवाच्यार्थश्च तत्पदवाच्यार्थशब्दे उक्तः शब्दा०। अव्ययी० अच् समासान्तः। तस्य समीपम् उपतदम्।

**तदर्थ** त्रि० स अर्थो यस्य, तस्मै इदं वा “अर्थेन सह नित्यसमासो विशेष्यनिघ्नता चेति” वार्त्ति० समासो वा। १तत्प्रयोजनके २तदुद्देश्यके “अन्तेवासी वार्थांस्तदर्थेषु धर्मकृत्येषु योजयेद् हिंसा वा” दाय० त० आपस्तम्बः। ३तस्याभिधेये ४तत्प्रयोजने च ततो भावे ष्यञ्। तादर्थ्य तत्प्रयोजनकत्वे। “तादर्थ्ये चतुर्थी” मुग्ध बो०।

**तदनन्यत्व** न० तयोरनन्यत्वम्। तयोर्भेदाभावे “तदनन्यत्वमारम्भणशब्दादिभ्यः” शा० सू०।

**तदन्यबाधितार्थप्रसङ्ग** पु० तदन्यः बाधितार्थस्य प्रसङ्गः। प्रमाणबाधितार्थस्य प्रसङ्गरूपे प्रमाणबाधितार्थप्रसङ्गापरपर्य्याये तर्कभेदे। तत्स्वरूपादि “स चायं तर्कः पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदात् इति” विभज्य आत्माश्रयादीन् लक्षयित्वा जगदीशेनोक्तं यथा उक्तचतुष्कान्यः प्रसङ्गः प्रमाणबाधितार्थप्रसङ्गः। सोऽपि द्विविधो व्याप्तिग्राहको विषयपरिशोधकश्च तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्यात्तदा जन्यो न स्यादिति। द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादि”। विषयस्य व्यभिचारशङ्कानिवृत्तिद्वारा निश्चायकत्वेन परिशोधकत्वम्।

**तदर्पण** न० तस्य स्वस्मिन् निक्षिप्तस्यार्पणं प्रत्यर्पणम्। निक्षिप्तद्रव्यस्य निक्षेप्तुरर्पणे। ६ त०। तस्यार्पणे च।

**तदा** अव्य० तस्मिन् काले तद्+दाच् विभक्तित्वात् अ। तस्मिन् काले इत्यर्थे। “तदा विधिः कुण्डलनां विधोरपि” नैष०।

**तदात्मन्** पु० स आत्मा यस्य। १तत्स्वरूपे २तदभिन्ने च। तस्य भावः ष्यञ्। तादात्म्य अभेदे “क्रमिकं यच्चात्मयुगमेकार्थेऽन्यार्थबोधकम्। तादात्म्येन भवेद्येषः समासः कर्मधारयः” शब्द० प्र०। “अभेदस्तादात्म्यं तच्च स्ववृत्त्यसाधारणो धर्मः। असाधारणत्वं चैकमात्रवृत्तित्वम्। एकमात्रवृत्तित्वञ्च स्वसामानाधिकरण्यस्य प्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वम्। इत्येकमात्रवृत्तिधर्म एव विशेषणविभक्त्यर्थः। इत्थञ्च तत्र प्रकृत्यर्थस्य संसर्गमर्य्यादया आधारादीनां तुल्यकालीनत्वं स्यात् एवमनुयाजमात्रस्योत्कर्षे तदूर्द्ध्वभाविनां सूक्तवाकसंवाकादीनां तुल्यकालीधर्मत्वादिना सामान्यप्रत्यासत्त्या सुज्ञेयत्वमेव। अभेदस्य संसर्गतामते येतादृशानुगतभेदस्यैव तथात्वमुचितम्। तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य विशेषत्वे तथात्वे घटो न नील इत्यादि वाक्यजन्यबोधे प्रतियोग्यभावान्वयीतुल्ययोगक्षेमावितिन्यायेन तादृशानुगतसम्बन्धावच्छिन्नप्रतियोगिताकाभावा एव भासेरन् नीलादिवृत्तिप्रतियोगिताकैकैकाभावः। तथा सति तादृशैकैकाभाव तात्पर्य्येण प्रयुक्तस्य नीलोपि न नील इति वाक्यस्य प्रामाण्यं स्यात्” व्युत्प० गदा० “सत्यैक्ये मिथोभेदस्तादात्म्यम् तच्च तत्सत्तातिरिक्तसत्ताकत्वाभावः” वेदा० प० “तदात्मनोपि निषिध्यमानत्वे तद्विशेषात्मके तदात्मनि जगत्प्रवेशात्। न हि घटः पटात्मेत्यनेन घटस्वरूपादन्यस्तदात्मा विहितः स्यात् यदि तु तादात्म्यं नामाभेदाख्यो धर्मः कश्चिदिष्यते स घटपटाद्यधिकरणतया निषिध्यते तदा संसर्गाभाव एव स्यात्। तस्मान्निर्विशेषण तदात्मान्तर्भूतं जगदिति कोऽत्यन्ताभाव इति”। श्रीह० खण्डखण्डने। अन्योन्याभावखण्डने उक्तम्।

**तदात्व** न० तदेत्यस्य भावः तदा+त्व। तत्काले अमरः। “तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः। “तदात्वे चात्ययिकीं पीड़ां तदा सन्धिं समाश्रयेत्” “आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः” इति च मनुः।

**तदादितदन्तन्याय** पु० न्यायभेदे अन्तभूतस्य कर्त्तव्यत्वे शास्त्रतः प्राप्ते आदिभूतस्योत्कर्षेण विधानबोधके न्यायभेदे। स च न्यायः जैमि० पञ्चमस्य प्रथमे पादे दर्शितो यथा। अग्नीषोमीयपशौ श्रूयते “तिष्ठन्तं पशुं प्रयजन्तीति”। अत्र प्रकृतौ पशुमारणानन्तरं हविष्प्रासादिते पश्चात् प्रयाजादय इज्यन्ते इति विकृतावत्रापि पशुमारणानन्तरं हविष्प्रासादिते प्रयाजाः प्राप्ताः ते च तिष्ठन्तमिति वचनात् जीवत्येव पशौ अपकृष्यन्ते। तथा सवनीयपशौ अनुयाजानामुत्कर्षः श्रूयते यथा अग्निमारुतादूर्द्ध्वमनुयाजैश्चरन्तीति। अत्र संशयः। प्रयाजमात्रस्योत्कर्षः प्रयाजाद्यङ्गकलापस्यापकर्षः अनुयाजाद्यङ्गकलापस्योत्कर्षो वा इति। श्रुतयोरेव प्रयाजानुयाजयोरपकर्षोत्कर्षौ नतु तदाद्यन्तकलापयोस्तदङ्गप्रयाजापूर्वभाविनामाघारसामिधेन्यादीनां तदाद्यपकर्षेऽत्यन्तव्यवहितत्वेन प्रधानकालीनत्वं न स्यात् प्रयाजमात्रापकर्षे तु

भासते। तादृशस्य धर्मस्तद्व्यक्तित्वादिरूप एव। अपूर्वव्यक्तिनिष्ठ तादृशधर्मस्य विशेष्य ज्ञातुमशक्यत्वेऽपि एकमात्रवृत्तिमत्त्वं स्यात् एवमनुयाजमात्रोत्कर्षे तदूर्द्ध्वभाविनां सूक्तवाकसम्प्रशाकादीनामुत्कर्षात् प्रधानसन्निधिर्न विलुप्यते तस्मात् प्रयाजमात्रस्योत्कर्षः तथा च सूत्रम् "अङ्गानां मुख्यकालत्वात् यथोक्तमुत्कर्षः स्यात्"। अङ्गानां मुख्यकालकर्त्तव्यत्वानुरोधात् यथोक्तस्यानुयाजमात्रस्योत्कर्ष इति प्राप्ते ब्रूमः। प्रकृतियागे सक्रमपदार्थानुष्ठानस्य क्लृप्तत्वात् विकृतावपि सक्रमाणां पदार्थानामतिदेशात् क्रमरूपाङ्गबाधस्यान्याय्यत्वात् उत्तरकालकर्त्तव्यकर्मपदार्थस्यानुपस्थित्यानुष्ठानविलोपापत्तेः तदुक्तम् पूर्वेणोपस्थितं कार्य्यमुत्तरं कर्मचोदनात्। प्राप्तं तदन्यथा भावे क्रमलोपाद्विलुप्यते"। तस्मात् प्रयाजापकर्षे तदङ्गकलापस्यापकर्षः, अनुयाजोत्कर्षे तदाद्यङ्गकलापस्योत्कर्ष", इति तत्त्वकौ०। अनया दिशा मासिकानां सक्रमाणां करणे उत्कर्षापकर्षौ कल्पनीयौ।

**तदानीम्** अव्य० तस्मिन् काले-तद्+दानीम् विभक्तित्वात् वा। तदेत्यर्थे। "तदानीमपि पार्श्ववर्त्तिनाम्" भाग० ५।८।२१। तत्र भवः ख्युल् तुट् च। तदानीन्तन तत्र भवे त्रि० स्त्रियां ङीप्।

**तदाप्रभृति** त्रि० तदा तत्कालः प्रभृतिरादिर्यस्य तदाशब्दस्य सप्तम्यर्थवृत्तेरपि कथञ्चित् प्रथमार्थवृत्तिता। तत्कालादिके "तदाप्रभृत्येव विमुक्तसङ्गः" कुमा०।

**तदासुख** त्रि० तदा सुखं यस्य। प्रारब्धे।

**तदित्** त्रि० तदेति इण–क्विप् तुक्। तद्विषयके स्तोत्रे। "वयमु त्वा तदिदर्थाः" ऋ० ८।२।१६ यद्विषयकं स्तोत्रं तदित् तदेवार्थः प्रयोजनं येषाम्" भा०।

**तद्गत** त्रि० तत् गतः। १तत्परे २तदासक्ते च। तद्गतेनैव मनसा" रामा० वा० २का०। "शुचिस्तद्गतमानसः" गीता

**तद्गुण** त्रि० तस्य गुण इव गुणोऽस्य। १तत्तुल्यगुणके २अर्थालङ्कारभेदे पु० ३९९ पृ० लक्षणादि दृश्यम्। ६त०। ३तस्य गुणे पु०। "तद्गुणसारत्वात्" शा० सू०। तत्र प्रधाने गुणः विशेषणम्। ४प्रधानविशेषणे तद्गुणसंविज्ञानः।

**तद्गुणसंविज्ञान** पु०. तत्र बहुव्रीहौ गुणस्य गुणीभूतस्य विशेषणस्य संविज्ञानं विशेष्यपारतन्त्र्येण बोधनं यत्र। व्याकरणोक्ते बहुव्रीहिसमासभेदे। भवति च लम्बकर्णमानयेत्यादौ गुणीभूतस्य कर्णस्याप्यानयने पारतन्त्र्येणान्वयबोधः। शब्द० प्र० स्वमते तल्लक्षणादिकमुक्त्वा प्राचीनमतसिद्धमप्युक्तं यथा "तदतद्गुणसंविज्ञानौ द्वौ भेदौ तदादिमः। विग्रहस्य विशेष्यो यस्तद्विशेष्यकबोधकृत्"। तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च बहुव्रीहेर्द्वौ भेदौ। तत्र विग्रहवाक्यस्य विशेष्यविधया प्रत्याय्योयोऽर्थस्तद्विशेष्यकबोधकृद्बहुव्रीहिः तयोरादिमस्तद्गुणसंविज्ञानस्तस्य स्वार्थगुणीभूतस्य सम्यग्विविशेष्यविधया विज्ञानं यस्मादिति व्युत्पत्त्या सान्वयसंज्ञकत्वात्। तद्भिन्नश्चातद्गुणसंविज्ञानश्चरमः इत्यर्थोऽस्यते। घटस्वरूपः पदार्थः इत्यादितोहि घटः स्वरूपं यस्येति विग्रहस्थले स्वस्वरूपाभिन्नघटसम्बन्धित्वेन घटाभिन्नस्वस्वरूपसम्बन्धित्वेन वा विग्रहविशेष्यं कलसमेव विशेष्यविधया बोध्यते घटस्य स्वरूपं यस्मादिति विग्रहे च विग्रहस्य यद्विशेष्यं ततोऽन्यदेव स्वजन्यस्वरूपाभिन्नघटसम्बन्धित्वेन। कुटादिर्गण इत्यादिरपि कुट आदिर्यस्येति व्युत्पत्त्या कुटाभिन्नस्य स्वधर्मिकव्यवस्थाधर्मिणः सम्बन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुणसंविज्ञान एव बहुव्रीहिः। प्राचां मतेन तद्गुणसंविज्ञानबहुव्रीहिमन्यथा निर्वक्ति। "यः स्वार्थघटकार्थस्य स्वार्थान्वयिनि बोधने। अनुकूलो बहुव्रीहिः स तयोरथवादिमः"। यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधने समर्थः स तयोस्तदतद्गुणसंविज्ञानयोरादिमः। लम्बकर्णमानय हारग्रीवं पश्येत्यादौ हि बहुव्रीहिर्लम्बस्वकर्णसम्बन्धिनः स्वग्रीवावृत्तिहारसम्बन्धिनश्च स्वार्थस्यान्वयिनि कर्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्णहारादेरपि व्युत्पत्तिवैचित्र्येणान्वयबोधने समर्थ इत्येवंविध एव तद्गुणसंविज्ञानस्तद्भिन्न एव चार्थादतद्गुणसंविज्ञानः। यथा दृष्टसागरमानय इत्यादाविति

**तद्दिन** न० कर्म्म०। "तस्मिन् दिने। तद्दिनं स्यादनध्यायं व्रतं तत्र न कारयेत्" मल० त०। १दिनमध्ये २प्रतिदिने च मान्तम् अव्य० शब्दार्थ चि०।

**तद्धन** त्रि० तदेव धनं यस्य। १कृपणे हेमच० स हि सर्वमेव धनमपर्य्याप्ततयावधार्य्य आत्मनि तद्धनत्वमेवाभिमन्यते कर्म०। २तस्मिन् धने न०।

**तद्धर्मन्** त्रि० स धर्म्मो यस्य अनिच् समा०। तथाभूतधर्म्मयुक्ते। "आकेनिप्स्वीकृतधर्म्म तत्साधुकारिषु" पा०

**तद्धित** त्रि० तस्मै हितम् । १तस्मै हिते । २व्याकरणोक्ते प्रत्ययभेदे पुं न० । "तद्धिताः ४।१।७६ पा० सूत्रेणाधिकृत्य "यूनस्तिः" इत्यादिना पञ्चमाध्यायसमाप्तिं यावद्ये प्रत्यया विहितास्ते तद्धितसंज्ञकाः ।
शब्द० प्रका० तल्लक्षणादिकमुक्तं यथा "विभक्त्यादित्रिकादन्यः प्रत्ययस्तद्धितं मतम् । नामप्रकृतिको नैवमतिव्याप्त्यादिदोषतः" । "विभक्तिधात्वंशलक्ष्णोऽन्यः प्रत्ययस्तद्धितः । इत्यक इत्यादौ सुखाद्यर्थकः कादिरपि तद्धितमेवेति । तदन्यत्वेनापि प्रत्ययं विशेषयन्त्यन्ये । नामप्रकृतिकप्रत्ययत्वन्तु न तद्धितस्य लक्षणं विभक्तौ क्यजादौ चातिव्याप्तेः पचतितरामित्यादौ तराबाद्यव्याप्तेश्च" । विभजते । "तस्यापत्यं तद्विशेषस्तद्वच्चेष युतेन्दुमान् । कालस्तथा तेन रक्तं तस्य व्यूहोऽथ वेत्ति तत् । अधीते वा देवताऽस्य सैषमादीन् यथायथम् । बोधयद्विविधानर्थांस्तद्धितं स्यादनेकधा" तेनास्य क्लीवत्वमपि "तद्धितस्याचामादेः" । "तद्धितश्चासर्वविभक्तिः" पा० । "समासतद्धितकृतां यत्किञ्चिदुपदर्शकम् । गुणप्रधानभावे च तस्य दृष्टो विपर्ययः" हरिकारिका । स च तद्धितो द्विविधः प्रकृत्यर्थभिन्नार्थकः स्वार्थिकश्चेति भेदात् ।

**तद्बल** पु० तस्मिन् बलं यस्मात् । १वाणभेदे "क्षुरप्रतद्बलार्द्धेन्दुताराकुख्याश्च तद्भिदः" हेम० । अस्य स्त्रीत्वोक्तिः प्रामादिकी "पुमान्" इत्यधिकारे "देवासुरात्मस्वर्गगिरिसमुद्रनखकेश दन्त स्तन भुज कण्ठ खड्ग शरपङ्काभिधानानि" पा० "पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः । स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः" अम० च पुंस्त्वोक्तेः

**तद्भाव** पु० तस्य भावः असाधारणधर्मः प्राप्तिर्वा । १तस्यासाधारणे धर्मे यथा घटे घटत्वम् । गोर्गोत्वम् । २तद्रूपप्राप्तौ च "अभूततद्भावे च्विः" "पयसस्तद्भावात्" कात्या० श्रौ० ४।३।२२ सू० । ७त० तस्मिन् भावः तद्विषयकचिन्तने "सदा तद्भावभावितः" गीता ।

**तद्राज** पु० तस्य राजा टच् । १तस्य नृपतौ २तदर्थविहिते तद्धितप्रत्ययभेदे च । "ते तद्राजाः" पा० ते अञादयस्तद्राजसंज्ञकाः स्युः "ञ्यादयस्तद्राजाः" पा० "पूगात् ञ्य इत्यारभ्य उक्ताः तद्राजसंज्ञका स्युः" सि० कौ० । तद्राजस्य बहुषु अस्त्रियाम् लुक् ।

**तद्र** अवसादे मोहे च सौ० पर० अक० सेट् इदित् । तन्द्रति अतन्द्रीत् । तन्द्रा

**तद्र्यञ्च(च्)** त्रि० तदञ्चति गच्छति पूजयति वा—अन्च्—गतौ पूजायां वा क्विप् टेरद्र्यादेशः पूजार्थत्वे न नलोपः । १तद्गामिनि २तत्पूजके च ।

**तद्वत्** अव्य० तेन तुल्यं या तुल्या सा चेत् क्रियेत्यर्थे वति । १तत्सदृशक्रियावति । तस्येव तत्रेव वा इत्यर्थे वति । २तत्तुल्येऽर्थे यथा तद्वत् शिवस्य विभुता, तद्वत् शिवे भक्तिरित्यादि । "तद्वत्ताद्दशि च स्थितम्" स्वाङ्गलक्षणम् । "चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया । तद्वद्विना विशेषैर्न तिष्ठते निराश्रयं लिङ्गम्" "पुरुषस्य मोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम्" सा० का० । "चतुर्वेदेष्वक्तौ तद्वत् प्रातिलोम्येऽपि जन्मनि" मनुः । तदु अस्त्यर्थे मतुप् मस्य वः । ३तद्विशिष्टे त्रि० "तद्वानपोह्यो वा शब्दार्थः" काव्य० प्र० "द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये" । "अथ वा तत्प्रकारं यज्ज्ञानं तद्विशेष्यकम्" भाषाप० स्त्रियां ङीप् । तस्य भावः तल् । तद्वत्ता तद्विशिष्टत्वे स्त्री "पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता" भाषाप० ।

**तद्विध** त्रि० सा विधा प्रकारो यस्य । तत्प्रकारे "धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा" मनुः । "क्व तद्विधात्वं क्व च पुण्यलक्षणा" कुमा० ।

**तन** विस्तृतौ तना० उभ० सक० सेट् । तनोति तनुते अतानीत् अतनीत् अतत-अतनिष्ट ततान तेनतुः तेने । उदित् तनित्वा तान्त्वा । ततः वितानः । "तनोति भानोः परिवेषकैतवात्" नैष० । "आचार्य्यस्तनुते विहृतिमिमां दायभागस्य" । दायभागटीका "ततान सोपानपरम्परामिव" रघुः । "यस्य तस्य विना षष्ठीं तेनेति करणं विना" उद्भटः । "तेनिरेऽभिरुचितेषु तरुण्यः" माघः "स तमीं तमोभिरभिगम्य तताम्" माघः "तन्वता प्रथमताद्दशि रागम्" माघः ।
अति+अतिशयविस्तारे । अतितत् । "तन्ततोऽतिततातिहृत्" माघः ।
वि+अति+व्यतितहारेण विस्तारे आत्म० "वियति व्यतितन्वातां मूर्त्ती हरिपयोनिधी" भट्टिः । [५।३५।७ अ० ।
अधि+आरोप्य विस्तारे । "धनुरधितनोति" शत० ब्रा० ।
अनु+सन्ततविस्तारे पश्चाद्विस्तारे च "परिपाल्यानुतनुयादेष धर्मः सनातनः" भा० शा० ११२ अ० ।
अप+अधोविस्तारे । अपतानकः ।
अव+सन्ततविस्तारे "विशालमूलावततं पवनामोदधारिणम्" हरिवं० ८८ अ० ।
आ+दीर्घतया विस्तारे । आतानः (टाना देओया) समन्-

मम । अग्निवर्णोज्ज्वलन् धीमान् स द्विजो रथधूर्य्यवत् । प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः । न च मे स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा । तथा स राजमार्गेण महता निर्ययौ बहिः । तद्दृष्ट्वा महदाश्चर्य्यं दाशार्हा जातमन्यवः । तत्राऽजल्पन् मिथः केचित् समाभाष्य परस्परम् । ब्राह्मणा एव जायेरन् नान्यो वर्णः कथञ्चन । को ह्येनं रथमास्थाय जीवेदन्यः पुमानिह । आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो द्विजः । ब्रह्माशीविषदग्धस्य नास्ति कश्चिच्चिकित्सकः । तस्मिन् व्रजति दुर्द्धर्षे प्रास्खलद्रुक्मिणी पथि । तत्रामर्षयत श्रीमांस्ततस्तूर्णमचोदयत् । ततः परमसंक्रुद्धो रथात् प्रस्कन्द्य सद्विजः । पदातिरुत्पथेनैव प्राद्रवद्दक्षिणामुखः । तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम् । तथैव पयसा दिग्धः प्रसीद भगवन्निति । ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह । जितः क्रोधस्त्वया कृष्ण ! प्रकृत्यैव महाभुज ! । न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत ! । प्रीतोऽस्मि तव गोविन्द ! वृणु कामान् यथेप्सितान्" ।

**दुर्विगाह** त्रि० दुर्+वि+गाह—कर्मणि खल् । १दुःखेन गाहनीये २धृतराष्ट्रपुत्रभेदे पु० "दुर्मदो दुर्विगाहश्च विवित्सुर्विकटाननः" भा०आ०११७अ० ।

**दुर्विदग्ध** त्रि० दुष्टो विदग्धः प्रा०स० । गर्विते "अलीकवेगदुर्विदग्धं गरुत्मन्तम्" काद० ।

**दुर्विदत्र** त्रि०विद—लाभे विद—ज्ञाने वा बा०अत्र विदत्रं लभ्यं धनं ज्ञानं वा ततः प्रा०ब० । १दुर्धनके २दुर्ज्ञानके च "आरे मन्युं दुर्विदत्रस्य धीमहि" ऋ०१०।३५।४। "दुर्विदत्रा निर्ऋतिर्न" ऋ०१०।३६।२।

**दुर्विध** त्रि० दुष्टा विधाऽस्य प्रा०ब० । दरिद्रे अमरः । (दमयन्तीचरणे) "अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम्" नैष० "विविनक्ति न बुद्धिदुर्विधः" माघः । २खले मेदि० ३मूर्खे शब्दर० । "शास्त्रेष्वन्येषु कवयो विद्यमानेषु दुर्विधाः । बुद्धिमान्वीक्षिकीं प्राप्य निरर्थान् प्रवदन्ति ते" रामा० २।१०६।२

**दुर्विनय** पु० दुर्+वि+नी—भावे अच् । विनयराहित्ये । दुर्+वि+नी—क्तिन् । दुर्विनीति तत्रार्थे स्त्री

**दुर्विनीत** त्रि० दुर्+वि+नी—कर्त्तरि क्त । १विनयाकर्त्तरि विनयशून्ये २अशिक्षिताश्वे पुंस्त्री०हेमच० स्त्रियां जातित्वात् ङीष् ।

**दुर्विमोचन** त्रि० दुःखेन विमोचनं यस्य । १दुःखेन मोचनीये २धृतराष्ट्रपुत्रभेदे पु० "चित्रवाहुश्चित्रवर्मा सुवर्मा दुर्विमोचनः" भा०आ०११७अ० । तत्पुत्रोक्तौ तु ६७अ० । दुर्विरोचन इति पाठान्तरम् । सोऽपि तत्पुत्रभेदे

**दुर्विवाह** पु०निन्दितो विवाहः प्रा०स० । ब्राह्मादिचतुष्कभिन्नेषु आसुरादिषु चतुर्षु विवाहेषु ब्राह्मादीनष्टौ विवाहानुक्त्वा मनुनोक्तं यथा

"ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः । रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः । पर्य्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः । इतरेषु तु शिष्टेषु नृशंसानृतवादिनः । जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः । अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा । निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत्"

**दुर्विष** पु० दुःस्थितो विषोऽस्य प्रा०ब० । विषकृतविकारशून्ये शिवे "दुर्द्धर्षो दुष्प्रकाशश्च दुर्विषो दुर्जयोऽजयः" भा०शा० २८६अ० शिवनामोक्तौ । तस्यामृतमन्थनकाले विषपानेऽपि तत्कृतविकाररराहित्यात् विषविकारस्य तं प्रति दुःस्थितत्वात्तस्य तथात्वम् । दुष्टो विषो वा पेयत्वे नास्त्यस्य अच् वा । दुष्टविषपानाद्वा तस्य तथात्वम् ।

**दुर्विषह** त्रि० दुःखेन विषह्यतेऽसौ दुर्+वि+सह—कर्मणि खल् । १सोढुमशक्ये दुःखेन सहनीये "सैषा दुर्विषहा माया दैवैरपि दुरासदा" हरिवं० ४६अ० २शिवे पु० "दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः" भा०शा०२८६अ०। ३धृतराष्ट्रपुत्रभेदे "दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः" भा०आ०१८६अ० तत्पुत्रोक्तौ

**दुर्वृत्त** न० दुष्टं वृत्तम् प्रा०स० । १निन्दिते आचरणे "दुर्वृत्तं धार्त्तराष्ट्राणामुक्तवान् भगवानृषिः" भा०आ०१अ० दुःस्थं वृत्तमस्य प्रा०ब० । २दुर्जने "दुर्वृत्तवृत्तशमनं तव देवि ! शीलम्" देवीमा० "चाटुतस्कर दुर्वृत्तमहासाहसिकादिभिः" याज्ञ०

**दुर्वेद** त्रि० दुःखेन विद्यते लभ्यतेऽसौ दुर्+विद+लाभे—कर्मणि खल् । १लब्धुमशक्ये दुःखेन लभ्ये "ये एव के च मारुत्यौ स्यातां दुर्वेदे एव वशा पृश्निर्यदि वशां पृश्निं न विन्देदपि" शत०ब्रा० ५।१।३।२ दुरुत्सन्नो वेदोऽस्य प्रा०ब० । २वेदपाठरहिते च । "दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा । ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः" भा०व०१९९अ०

